# आनन्दविजयाभिधान नाटिका

—❋❋—

रोलम्बाकृतिसुरततिदनुजमुनीन्द्रादिचिन्तितं तेजः ।
आनन्दचिन्मयं वः क्षपयतु दुरितं परब्रह्म ।।१।।

अपिच—

रङ्गाडम्बरमूर्च्छदक्षिदहनज्वालाकुलेन्दुस्रवत्—
पीयूषोच्छ्वसितेऽपसृत्य नदति व्याघ्राजिने वाससि ॥
मेघध्वानधियः कुमारशिखिनः संफुल्लपिच्छच्छदै—
श्छन्नः प्रीतमना पुनातु भवतामाधिज्वरं धूर्जटिः ।।२।।
उद्दामाहवचुञ्चुचञ्चुचरणाघाताबघातव्यथा—
व्यस्तस्याहिपतेः पलायनविधौ दत्तावकाशोत्सवः ॥
श्रीगौरीकवरीविलोकनकलोत्पन्नो भवद्वैरिणा—
मुत्तापाय कुमारचन्द्रकिपतेर्भूयादसूयारसः ।।३।।

## * मङ्गलगीतम *

शशिशेखरा शशिशेखरा ।
भावकजन घन मंगल दायक, विघन विनायक त्रिपुरहरा
घन धुनि धीर मुरज रव उपगत, कातिकशिखिगहुनागवरा
से छोड़बइत बघम्बर ससरल, गिरिकूमरि भेल हासपरा
अतिउतफाल अनलसेहो पसरल,जेहिभसमभेल कुसुमशरा
गौरि कोर लय तनय पड़ाइलि, विहुसिहि हसल महेशवरा



भौरिभरे सुरसरि बढ़ि आइलि, वारि बेआपित भेलिधरा
वीचीवेग मूस भसिआएल, जोहइत विकल गणेश वरा
नन्दिभृङ्गि करताल बजाबए, कलकल करय भूत निकरा
नचइत शंकर सुन्दर नृप वर, देथु राम मन जोरि करा

अपिच—

प्रणमञो प्रणत कलपतरु रूप,
देख मुनिबालहिँ अलष सरूप ।
आशा सरित सँतारन सेतु,
सुख सारथ पुरुषारथ हेतु ॥
माँगओ माय माहेश्वरि एह,
अभिनव अभिनय यश मह देह ।
हर वरतनु अनुचर भन राम,
पूरिअ सुन्दर नरपति काम ॥

( नान्द्यते )

सूत्रधारः—अलमतिविस्तरेण । तद्भवतु नटीमाहूय प्रस्तुतं साधयामि ( परिक्रम्य अवलोक्य च )। अये तदेवेयं मूर्तिमती भवन्नीतिरिव मदीयभाविनी विभूषयति । तत्प्रियामाकारयामि सबहुमानम् ।

सज्जनमनोनुरञ्जनसागरपारोत्तारणे तरणि !
पञ्चेषुसञ्चितामयमहौषधि ! क्वासि जीवेशि !!४

[ ततः प्रविश्य ]

नटी—वन्दामि अज्जउत्तम् । अज्ज उत्त एरिसवहुमानवअणोवण्णासेण सङ्का साअर पङ्कपग्गहीणो अह्माणं मणो मिओ मग्गं न लहेइ । अइ-आअरी क्खु सङ्कणिज्जो होइ ।

सूत्र०—कुतः पुनरयं वामतावतारः । अथवा,

वामता वनितानां हि न विचित्रमिदं यतः ।
न वह्नौ वामता गौरी शरीरमपि शूलिनः ॥

नटी—(विहस्य) तारिसं चिरं सुणाविअ समप्पिअ जीविअंपि राहिअं सव्वूण महुरा णअरम्मि चिट्ठदो माहवस्स वुत्तन्तो ण वेदइ जारिसो पुरुसोत्ति ।

सूत्र०—( स्मृतिमभिनीय सरोमाञ्चम् ) प्रिये साधुसाधु ! हितानां वामतापि प्रायो हितहेतुरेव । यतो भगवतो भुवनेश्वरस्य पादारविन्दा-मलहृदयवृन्दमभिनन्दयितुं मां राधामाधवचरितपवित्रीकृतमानन्द-विजयाभिधानरूपकमनुस्मारितवती भवती ।

नटी—एदं क्खु कंसदेव्वतरुणो फलं जहि गन्धव्वराज इव्व अज्जोवि हरिसं रज्जेइ ।

सूत्र०—इदं हि कात्यायनगोत्रस्य कुशलीकुलनन्दनस्य—

यस्मिन् गर्जति रोमदण्डकपटेनावलरत्नाङ्कुरी-
गात्रेऽपि वपुः विदूरखणवो विख्यातसंख्यावताम् ।
श्रीगोविन्दघनेन तेन गुरुणा कारुण्यपुण्याम्भसा
सिक्तस्यामरशाखिनो नवरसं रामस्य रम्यं फलम् ॥४

एतच्च मिथिलाविलासिनी-हृदयमन्दिर-सुन्दरनरेशाय तेनोपहारी-कृतम् ।

नटी—अज्ज ! सुन्दरणरेसं उण कधेहि ।

सूत्र०—स एष सुन्दरनरेशः ।

श्रियमपरामतिसुभगगणमणिलयमादाय निर्भरं सिधुः ।
निवसति मन्मथभीतिरवलपुरे मस्तकाङ्गकपटेन ॥५

नटी—अज्ज ! सुन्दरणरेसं अह्मेहिं भद्दं जानिअदि ।

सूत्र०—क इव ।



नटी—

तवक पंकअ अक्क रूअ अणूअ सुइकर पण्डिओ ।
तीअ सिक्ख महेस मक्ख णरेस आणइ मंडिओ ॥
जीअ सुणि वखाण सम्मह पाण वड्डिअ दप्पओ ।
बीसमेइ समस्त पण्डिअ चाओ मानस छप्पओ ॥
तीअ पुत्त कइत्त कम्म सुहा समुद्द सुहंकरो ।
तीरहुत्ति समत्थ भूवइ वेरि पक्ख भयंकरो ॥
तीअ सुअ पुरिसोत्तमो सो अहीर खानि खड्डिआ ।
राम मत्त तमाल हिअअं जीअ कित्ति तरप्पिआ ॥
तुविअ पुत्त णराअणो णरणाह लक्खन लक्खिओ ।
जीअ कम्म विपक्ख णाअरि गेण धीर न सुक्खिओ ॥
तीव सोअर राम भूवइ दाम कण्ण णरेसरा ।
दुविअ सोअर रयाम पंडिअ कम्म धम्मिअ सेहरा ॥
धम्म कम्म गरिट्ठ तीअ कणिट्ठ सुन्दर भूवई ।
जीअ रूअ गिलास नक्ति समुद्द मज्जइ जुव्वई ॥
जहव (पञ्चर अङ्कणे) सुरताण सप्पिअ मत्थआ ।
जेण साहिअ अप्प सिप्पि णरेस लाइअ सत्थआ ॥

सूत्र—साधु त्वया वर्णितसे सुन्दरनरेशः । परन्तु क एष सूचिकर पण्डितः ?

नटी—स अम्ह कइणो पुव्वपुरिसो ।

सूत्र—तर्हि गुरुकुलतया पूजनीयोऽयं कविः सुन्दरनरेशस्य ।

नटी—अहं । संस्कृतभाषितव—

कमलाकरसङ्करसी नीलकलिभिम्बकवलयापीडः ।
स जयत्यविकलकामतो मधुसूदनपरिपक्षविक्षेपः ॥६

सूत्र—( आकर्ण्य ) कथमावयोरस्तोवासिभिरभिनवैर्विभिमधिप्रावेशिकीयमार्या गीयते । तदेहि कृत्यान्तराय गच्छावः ।

[ इति निष्क्रान्तौ ]

( इति प्रस्तावना । )

[ ततः प्रविशति वक्ष्यमाणरूपो माधवः ]

नागरीहृदयपङ्कजपालीग्लानिमुद्रणहरं कलिलेशः ।
मोहयन्नयनवक्रनिपातैर्माधवो जनमुदे समुदेति ॥७

* गीतम् *

आनन्दमय माधव परवेश
नागरि हृदय सरोज दिनेश,
रोचन तिलक विलोचन अङ्क, तनु अनुलेपन मलयजपंक
कुण्डलवेणु वलय अमलान, पीतवसन घन सामर वान।
सरस राम भन माधव रूप, रस बुझ रसमय सुन्दर भूप ॥

माधवः सुन्दरोऽयं वृन्दावनप्रवेशः । तदत्र मुहूर्त्तमानन्दकन्दा-
पेक्षया समुपविशामि ।

[ इति केलिकदम्बाश्रितकालिन्दीकूले समुपविशति ]

( ततः प्रविशति इदमीरयन्नानन्दकन्दः )

* गीतम् *

हमहि विदित आनन्दकन्द, आधि अधार अखण्डित चन्द ।
एहन टीका एहन धोती, एहन काहु न बरय जोती ।
हमहि सब(?)नरतन गाहि, आसहु ताहि कला एक बाढि
राम रसमय कौतुक गान, सुन्दर नरपति बूझय भाव ॥

( परिक्रम्यावलोक्य च ) दिष्ट्या निकट एव कालिन्दीकूलमल-
ङ्करोति महाभागधेयो माधवः । तदुपसर्पामि ।
( इत्युपसर्पणं नाटयति । )



माधवः—( विलोक्य सानन्दं ) प्रियानन्दकन्द ! एह्येहि ।

विदूषकः—( साटोपमुपसर्पति । )

माधवः—सखे ! इत आगम्यताम् ।

विदूषकः—(उपविश्य चक्षुषी निमील्य ध्यायति । )

माधवः—( सपरिहासं ) सखे ! किमेतत् ?

विदूषकः ( सकोपं चक्षुषी विस्फार्य माधवं प्रति )
अहो कलेरुपकारी युगे समारोप्यस इत्युपलक्षणं किं न जानासि ?

माधवः—( सकौतुकं ) नेत्रनिमीलनमेवोपकारः ।

विदूषक—यदि वेत्सि तदा तथैव ।

माधवः—नेदेवन्तदाख्याय कथय ।

विदूषकः—( सभ्रू विकारं ) चपेटं गृहाण ।

माधवः—सम्यगिहापराध्यति किन्तु नाहं, ततः कथय ।

विदूषकः—श्रोष्यसि चेन्मोदकसहस्रमङ्गीकुरु ।

माधवः—देयम् ।

विदूषकः—तदाकर्णय ।

* गीतम् *

आज मधुपुर जाइते पथ भेटलि राधा ।
मानस मीन तरङ्गिनि विहि रचल अगाधा ॥
कुन्तल शैवल, लोचन अलि मधुमद भोरा ।
आनन कमल अधर दल कुच चकेवा जोरा ॥
बाहु मृणाल नाभि ह्रद भुजघन अवतारे ।
किंकिनि कलरव कैतवें जलचर परचारे ॥

शोभय चारु उरु छले करि कर अभिरामे ।
मिलति मुरारि पयोनिधि मन रसमय रामे ॥
कमलावति-पति गुनमत सुरतरु अवतारे ।
रस बुझ सुन्दर नरपति सब नागर सारे ॥

माधवः—( सोत्कण्ठं ) सखे ! केयं राधा नाम ?

विदूषकः—चाचालादि - सुसखी - निवेद्यमानेषु मुरारिवृत्तान्तेषु सुधासदृशतदाह्लादेन—(?)

माधवः—यथा मे नयनपथमेति तथा विधीयताम् ।

विदूषकः—( सकौतुकं ) दिष्ट्या न कथयसि स्वर्गस्य चन्द्रं करे कृत्वा देहीति ।

माधवः—तर्हि निराशो भव मज्जीवितेन । किमेवम-

विदूषकः—( कर्णौ पिधाय ) शान्तं पापं, वयस्य ! मङ्गलं भाषसे ? तदा ध्यानता मया तद्दर्शनोपाय एव विचारितः ।

माधवः—स कीदृशः ?

आनन्दकन्दः—भाविदिने भवता केलीकदम्बसन्निहितमाधवीलतान्तरितेन स्थेयं, मयापि वेषान्तरेण कल्पितकदम्बकुसुमावचयबोधकश्रुतिं श्रावयित्वा सखीभिः सह राधां प्रेषयित्वा त्वया समेत्य स्थेयम् ।

माधवः—साधु साधु ! तदिह मन्दिरमेव गच्छावः ।

( इति निष्क्रान्तौ )

( ॥ एष सोत्कण्ठमाधवोनाम प्रथमोऽङ्कः ॥ )



## अथ द्वितीयोऽङ्कः

[ ततः प्रविशति विचक्षणा-चाचालादिसखीसहिता राधा ]

राधावते नवेक्षणमाननशोभाकरम्बितशुभाभिः ।
तिम्बली विधुसङ्कृतकाञ्चनलतिकाञ्चितं तेजः ॥८

❋ गीतम् ❋

देल परवेश परम सुकुमारि, हंसगमनि वृषभानु दुलारि
तनु अनुपम रे बदन सानंद, दामिनि उपरउगलजिमिचंद
नासाललितनयननहिँथीर,जनि तिलफुलदुहुदिसअलिफीर
अधरसँदरयदसनघनजोति, नवदलबेढ़ल जनि गजमोति
भाँगिजाइतकुचभरपरिनामे,तेँदहुँतिवलिगुणेबाँधलिकामे
सरस राम मन राधा रूप, रस बुझ रसमय सुन्दर भूप

विचक्षणा—सहि सहिए ! एतावत्थु वीसाम वाडिआ । एत्थ मुहुत्तं उविसह्मा ।

राधा यदभिरोचते वयस्यायै ।

( इति सर्वा उपविशन्ति )

राधा—सखि विचक्षणे ! गतदिने भवतीभिर्मधुपुरपथे प्रस्तुतो माधवोऽपि नाम कदापि बोधनीयः ।

विचक्षणा—सहि ! सो क्खु गोव णरवइणो णन्दस्स तारिसो दारओ तुमं उन भट्टिदारिआ, ता दुक्करं एदं ।

राधा—तर्हि मज्जीवनमपि पीडाकरमिदमवधारय ।

( इत्यभिधाय साश्रमधोमुखी तिष्ठति )

चेटी—( प्रविश्य ) वन्दामि भट्टिदारिअं, एको क्खु गुणणिहाण-णामधेओ बुड्ढ बम्हणो बहुविज्जो णअरदो तुवं पेक्खिदुं बाहीमुहे चिट्ठदि।

राधा—(निशम्यावधार्य) स्वागतम्, अस्मिन् समये दैवज्ञसन्निधान-मनुकूलमेव। (प्रकाशम्) द्वारपालिके! द्रुतं प्रवेशय तम्।

( ततो द्वारपालिकयानुज्ञातस्तिथिपत्रकरः प्रविशतीदमीरयन् गुणनिधाननामप्रसिद्धो ब्राह्मणः )

जगत विदित हमे गुणक निधान,
चार(रू) वेद हमर अनुमान,
जोतिष रवि आकास गिरिजेश,
सुरगुरु लेथि हमर उपदेश
हमर वचन जे कर परमान,
से निज अभिमत पाव निदान,
सरस राम कवि कौतुक गाव,
सुन्दर नरपति अनुभव भाव.

राधा—( विलोक्य ) सखि विचक्षणे! द्विजोऽयमनिर्वचनीयमनु-मैति। तदाराधनीयोऽयमिति। (ससम्भ्रममुत्थाय) आर्य! वन्दे। ( इति पादयोः पतति )।

गुणनिधानः—वत्से! श्रीपतिकलत्रा भव। (इत्युदीर्योपविशति)
( राधा आसनादिकमर्पयति, गुणनिधानः सर्वमङ्गीकरोति )

राधा—मत्पूर्वपुण्यार्जितमेव श्रीमदागमनम्। तदाज्ञापयतु तत्रभवान् किमाचरामीति।

गुणनिधानः— राधे! त्वां द्रष्टुमेवागतोऽस्मि।

राधा—तदानुगृहीतास्मि देवेन।



विचक्षणा—( राधापाणिं प्रसार्य ) अज्ज अनुगेह्णिदव्वं एदं दंसनेन।

गुणनिधानः— ( सादरं विलोक्य सामुद्रिकमभिनीय ) राधे! त्वं सर्वस्य हितमाचरसि न च तत्स्वीकरोति कोऽपि।

राधा—आर्य! सत्यम्।

गुणनिधानः— एकस्ते मनोरथस्तिष्ठति स च पूर्तिमेष्यति, किन्त्वेकदा जलविहारे गम्भीरजले पतितासि।

( राधादयः सप्रश्रयम् परस्परमवलोक्य पादयोः पतन्ति। )

राधा—भगवान्! काद्य तिथिः?

गुणनिधानः ( तिथिपत्रमालोक्य ) माधवासितचतुर्दशी तिथिरद्य।

राधा—किमद्य विहितम्?

गुणनिधानः— आरचितधूलिकदम्बकुसुमेन गौरीशंकरपूजनम्।

राधा—किमस्य फलम्?

गुणनिधानः— अभिमतसिद्धिः। ( इत्यभिधाय आकर्ण्य ) कथमये प्रहरविरामघटिका ताडिता। तद्गच्छामि स्नानाय। ( इत्युत्तिष्ठति )

राधा—आर्य! कुशलादिकं विधेयम्।

गुणनिधानः—शान्तम्पापं, ममापि रुद्रवतमेवाद्य।

( इति निष्क्रान्तः )

राधा—सखि विचक्षणे! त्वया पूजासम्भृतिमानीयतां त्वरितम्। शाखालादि-सखीसहिताहं धूलिकदम्बकुसुमावचयाय गच्छामि। ( इत्युत्तिष्ठति )

विचक्षणा—सहि! जहा कालाइक्कम ण भोदि तहा कत्तव्वम्। (इत्यभिधायोत्थाय पूजासंभृतिमानेतुमपसरति)।

राधा–( वाचालादिसहिता गमनमाटयति । )

बाभन वचन बेद अनुमानि
तोड़य कदम फुल चललि सयानि
चौदिस सहस सहस चलु आलि
पथ पुरहुत पय पंकज पालि
पसरल सोन वअन चय भास
अरुन किरन जनि भरल अकास
मुख परिमल उपगत दुरुवार
भमर भास भेल भुवन अन्धार
सरस राम कवि कह परमान
बुझ सुन्दर नृप परम सुजान

राधा—सखि वाचाले ! एक एव हि वृन्दावनैकवेद्यो कालिन्दीकूले धूलिकदम्बोऽयं केलिकदम्ब इति गीयते इति तत्रैव गन्तव्यम् ।

वाचाला–अथइं ?

( ततः सर्वाः सलीलञ्चलन्ति । )

वाचाला–( विलोक्य ) सहि राहिए ! पेक्खु पेक्खु, वृन्दावण लच्छी जअवइल्ल तहा ।

पास भेउर सइ वास मराल कूजिय वज्जई ।
भिङ्गगज्जिय गुञ्जरङ्ग मिसङ्ग मण्डल वज्जई ॥
कोइलाधुनि ( रागपंचम कंठ ) गीतं कोकिला ।
( भाव भंगि-तरंग नत्तिय नलिन कोरअ मंडिया )
मलय मारुअ परस सोह असोअ पल्लव हत्थला ।
चम्पकालि मअइ सोहइ कामकन्ति असल्लया ॥



राधा—सखि सत्यमेव । ( तत्पुरतो विलोक्य ) अये । एष एव धूलीकदम्बः, अदत्र कुसुमावचयं कुर्मः । (इति सर्वाः कुसुमावचयं नाटयन्ति । )

(ततो माधवीलतान्तरितं माधवं प्रत्यागत्य मिलित आनन्दकन्दः । )

आनन्दकन्दः—सखे ! पश्य समागता राधादयः ।

माधवः—(सोत्कण्ठं विलोक्य )सखे ! कतमा पुनरासु राधा ?

आनन्दकन्दः – (अंगुलिसंज्ञया ) सा राधा ।

माधवः—[ निरूप्य ] अहो ! मानुषीषु विधानपाटवं वेधसः । किञ्च पश्य पश्य राधायाः–

आलिसमाहित-कुसुमादानाञ्चलितबाहु-युगलपदात् ।
मन्ये काञ्चनलतिके प्रसृतिके पुण्डरीकेन ॥९॥

आनन्दकन्दः—[ स्वयमपि कुसुमावचयं नाटयन् ] 'सखे ! पश्य पश्य ।

चरणांगुलिधृतधरणी करपल्लवकोमलकलितशाखेयम् ।
उद्गच्छता स्तनेन प्रायो गगनाय हृष्यते सुतनुः ॥१०

माधवः—साधु सखे ! साधु किञ्च
एतत्करतलपल्लवकोमल–संस्पर्शनिर्वृतो विटपी ।
उद्भिन्नकुसुमकेसरकपटात्पुलकावलीं वहति ॥११

तद्भवतु, लगुडमुद्यम्य भीषयाम्येतास्त्वं पुनर्दूरं गत्वा तिष्ठ ।

आनन्दकन्दः—[ततः प्रविशति लगुडमुद्यम्य ]–हं वृष्टाऽऽस्त्वेव धृता-सि क्व यास्यसीति ।

राधा—[ सभयं वाचालामुखं पश्यति ]

वाचाला—सहि ! ण भेदव्वं ण भेदव्वं किङ्कुरिस्सदि एसो बम्भणो ।

आनन्दकंदः ! लगुडकुटभूरेखया वेष्टनया या पुनरितो बहिर्यास्यति सा लगुडेन ताडनीया [ इत्युच्चैर्विहस्य ]–

आनन्दकन्दः—

**✻ गीतम् ✻**

नन्दननृप कुमर मथाइ, केलि कदम्ब हलुआइ, ।
हमहि कहिए तन्हि साखी, तकर कुसुम हलु राखी ॥
एकहोम फूल लइ लाखे, कनओ न तोह भेल धाखे ।
दिन दश चोर चोरावे, साधु एक दिन धरि जावे ।
आब कि करह तोह लाथे, बेचविहे हटवइ हाथे ।
सरस राम परथावे, सुन्दर नृप बुझ भावे ॥

**✻ छन्द ✻**

एक फूलक मूल देइते तोहें जयवह भागि ओ ।
लाखे लाखे तोहुँ तोड़ल, देब होइहथि साखि ओ ।
एखने तोहरा चित्त होइह कीए भेल न पाखि ओ ।
पाँखि होइत ऊड़ि जइतहुँ आलि संकट राखि ओ ॥

वाचाला—

**—गीतम्—**

जहि कर भुजयुग दापे, सकल सुरासुर कापे ।
एसन भूपति कंस राना, तसु बालह वृषभाना ॥
तसु कुमारि मोरि राही, कोने बल छेकह ताही ।
केलिकदम्ब अभिरामे, कत युग लय एहि ठामे ॥
दिन दश केर मथाइ, कादे परितन्हि हलुआइ ।
सरस राम एहो माने, सुन्दर नृप रस जाने ॥



**— छंद —**

नारि नारि सताय कानन, की बढावह दंद ओ ।
के न जानए उग्र शासन, कंस भूवइ मंद ओ ॥
सुनि पावत कोहें धावत, बेढि गोकुल गाए ओ ।
नंद राए बँधाए राखत, कोने लेब छोडाए ओ ॥

[ ततः कोपाक्रान्तकलेवरो दशनान्तदष्टाधर आनन्दकन्दो वदति ]

आनन्दकन्दः—

**— गीतम् —**

सुनु सुनु सुबुधि गोआरी, एमति अइलिहि फुलबारी ।
दितहुँ उतर तोहि आजे, तिरि गुनि मानिअ लाजे ।
शिशुडाकिनि बक बीरा, केसी अघ अहिक शरीरा ।
जब हरि कैल विधंसा, न देखल तबे तोर कंसा ।
आज लुटल वृषभाना, कालिह मारत कंस राना ।
सासति तिन्ह की लुराई, मथुरा फिरत दोहाई ।
तोहें जाएब निज वासे, आबे दुर करह से आसे ।
सरस राम परथावे, सुन्दर नृप बुझ भावे ॥

**— छन्द —**

कंस एसन कोटि कीटक, कोहें की हम घाख ओ ।
छाडि देओ न तोहि आब, ओ देवदा वरलाख ओ ।
एक एक कदम्ब फूलक, कोटि कोटि अकार ओ ।
तेइ गापिन जाए पावह, काजे लावह सार ओ ।

वाचाला—[ सवासं जनान्तिकं ] सव्वं भणइ वम्भणो महावण्णेण तं करिणज्जं कधेहि ।

राधा—[आनन्दकन्दं प्रति]

— गीतम् —

निरनय दुरनय भाजन हम कर व्यवहारे ।
न जानल राख कदम्ब फूल गिरि नन्दकुमारे ।
सखि मोर सुबुधि कहल जत कटुवचन अपारे ।
खेमिअ खेमिअ दुजभूषन तिरिजन अपराधे ।
सात अपराधहुँ बड जन नहिँ करए निदाने ।
मथनहु सिन्धु नहिँ उपटय जग के नहि जाने ।

आनन्दकन्दः—राधे ! क्रीत एवाहं त्वयानेन विदग्धवचनोपन्यासेन । अहो ! ते समयज्ञता अथवा किं विचित्रं यत्राकृतिस्तत्र गुणा वसन्ति ? किन्तु कदम्बकुसुमानां स्तवकेन कमलारञ्जप्रसादबीजमिति नावधारयामि ।

राधा—

— गीतम् —

निज कर तोड़ि कदम्ब फुल पुजि गौरि महेशे ।
आज पाओब निज अभिमत हेनवेद निवेशे ।
सरस राम सुचित भन रस बुझ रसमन्ता ।
सुन्दर नृप गुण मन्दिर कमला रति कन्ता ।

आनन्दकन्दः—(स्मृतिमभिनीय,) अयमाधवाभिलचतुर्दशीति तद्विहितमेवेवम् । [ विमृश्य ] राधे ! माधववल्लभानि किल कदम्बकुसुमानीति परवशमाभाषितासि, तदधुना परवानस्मि लज्जया ।

राधा—आर्य ! सापराध एव मादृशो जन इत्यलं लज्जया ।



वाचाला—अज्ज ! सव्वपुरे सुणीअदित्ति तस्स दंसने उक्कण्ठिआ णो पिअसही ता कहिं दाणिं महाभागधो माहवो ।

आनन्दकन्दः—पुरत एव चलितो न जाने क्व चिरायितः । किञ्च सोपि भवत्सखीकुतुकी तिष्ठति ।

राधा—[ स्वगतम् ] अहो ! मयि पक्षपातो विधातुः ।

वाचाला—अज्ज ! सुदा णो पिअसही केण ?

आनन्दकन्द—अथ किम् ?

राधा—[ सोत्कण्ठं वाचालामुखं पश्यति ] ।

वाचाला—केण भणिदा ?

आनन्दकन्दः—मयैव ।

वाचाला—तए कहिं दिट्ठा ?

आनन्दकन्दः—गतदिने भवतीभिः साकं मधुपुरपथे गच्छन्ती ।

वाचाला—हुं ! तस्सिं अवसरे अज्जो उण कहिं ?

आनन्दकन्दः—माधवमन्वेषयन् कालिन्दीकूले ।

वाचाला—[ राधामुखमवलोक्य ] सहि ! सव्वं दिट्ठो क्खु एआरिसो पुरुसो कालिन्दीऊले ?

ताः समाः—[ आनन्दकन्दं प्रति ] अज्ज ! दंसणं कुरिस्सदि महाभाअस्स पिअसही ।

राधा—[ निःश्वस्य ] सखि ! मन्दभागधेयानामस्माकं कुत्रायं समयः, तदलं दुरापशङ्कुलेन !

आनन्दकन्दः—[ विलोक्य ] वाचाले ! पश्य पश्य, हरिणोऽयं भीतभीत इव द्रुतं प्रयाति ।

[ ततः सर्वाः पश्यन्ति । ]

आनन्दकन्दः—[ निरूप्य सवितर्कं ] यथानिरुद्धगन्धोऽयमनिलो हरिणश्चायं भीत इवापसृतस्तथा तर्कयामि । .

[ शार्दूल इत्यतीत्यभिधाय सगुडमादायोत्तिष्ठति ]

[ 'हा हा वयम्' इत्यभिधाय राधादयः ससंभ्रममुत्तिष्ठति ]

आनन्दकन्दः—राधे ! न भेतव्यं किन्तु चेद्यावत्तिष्ठ तावल्लोचनयोः साम्मुख्ये लोचने निवध्नीयाः । यावदहमित एव माधवमाकारयामि । न खलु लोचनसाम्मुख्ये शार्दूलः प्रहरति ।

राधा—आर्य ! कुत्र खलु स महाभागः ?

आनन्दकन्दः—निकट एव ।

वाचाला—[ विलोक्य सोरस्ताडं ] हम्महे ! घोणन्तलंगुललाडित भूअलो उप्फालललिअ गअणमण्डलोव्व विआसिअवन्तजीहा कडगकाअन्त-दन्तरो पेक्खन्तमुहकन्दरो उआगदो ज्जेव दुट्ठ सद्दूलो ।

[ आनन्दः सर्वाभिस्सह तल्लोचनाभिमुखे लोचने विधाय तिष्ठति ] [ आनन्दः सर्वाभिस्सह द्रुतमपरिक्रामन् 'रक्ष रक्ष माधव' (इत्युच्चैर्नदति, ततः प्रविशति माधवः । ]

माधवः—न भेतव्यमयमहमागतोस्मि । [ इति राधादिशार्दूलयोर न्तरे तिष्ठति । ]

राधा-नन्दकन्दौ—महाभाग ! अप्रमत्तेनेह भवितव्यमयमतीव दुरा-सदो जातः ।

राधा—[ विलोक्य ] हा धिक् कष्टं ! सखि वाचाले ! अस्माकं कृते निखिलजीवलोकविभूषणं निजशरीरं शार्दूलोपहारीकरोति महाभागस्तद्भवतु, अहमेव स्वदेहमुपहारीकरोमि ।

[ इत्यभिधायोत्तिष्ठति । ]

वाचाला—[ सास्रं ] सहि ! राहिए चिट्ठ तुमं, अहं ज्जेव णिअ सरीरं उवहारीकरेह्मि ।

राधा—[ विलोक्य सोरस्ताडं ] सखि ! पश्य पश्य, प्रहरति चपेटेन नखायुधो माधवम् ।

वाचाला—[ सानन्दं ] सहि ! दिट्ठिया तं पहारं विफलं कदुअ माहवेण मुट्ठिणा ताडिदो, सद्दूलो । [ निरूप्यच ] पुणोवि माहव मुट्ठिप्पहारभीरुव्वजीअलोअं गदो, जदो अअं णिप्पन्द इति ।



आनन्दः—[ विलोक्य द्रुतस्खलितमुपक्रम्य माधवं गाढमालिङ्ग्य ] दिष्ट्या हतोऽयं दशनायुधो वयस्येन ! धन्या वयं भवता नाथेन ! साधु भो साधु, त्रिभुवनावतंस माधव !

प्रकटित बहुपुण्डरीकदेहं करकमलेन विदारितः कृतान्तः ।
असुरसुरनराहिपुङ्गवानां न तव तुलामुपयाति कोऽपि वीरः ॥१२

माधवः—कृतं सखीपयि कर्मणि बहुविधाभिनन्दनेन । तदेहि सर्वाः । समेत्य कदम्बतले समुपविशामः ।

[ इति माधवनन्दनकन्द-राधादयः परिक्रम्योपविशन्ति । ]

राधा—[ जनान्तिकं] सखि वाचाले ! निष्कारणमाधवपक्षपाति मे हृदयं जीवितमप्यहितङ्करोति । तथाहि

निष्कलङ्ककुले जन्म पाणिपीडनमञ्चराः ।
माधवे परमा प्रीतिर्जीवितस्य हितम्मम ॥१२

वाचाला—सहि ! पेक्खु पेक्खु एसो वि महाभाओ तुअपेम्मपराहीणो चिट्ठदि ।

राधा—कथमवधारितम् ?

वाचाला—सहि ! दीर्घ णीससन्तं रिसं खलु सरीरावत्थं मन्दमारुत-घोणन्तं प्रफुल्लपुण्डरीअसच्छहेरन्तेहिं विलोअणेहिं विलोअन्तं ण पेक्खसि !

राधा—सखि ! इदमपि निवेदितहेतुगमर्मसंस्थमेव ।

माधवः—प्रियानन्दकन्द ! काः पुनरेताः किमर्थमिहागताः ?

आनन्दः—[ अंगुलिसंज्ञया दर्शयन् ] इयं राधा, इयं वाचाला सख-श्चीपराश्च तत्सख्य एव, आगताश्च गौरीशङ्कराराधनाय केलीकदम्बकुसु-मान्याहर्तुम् ।

माधवः—[ ताः प्रति ] पीडिता यूयमकाण्डपुण्डरीकोपनिपातेन अहो दुर्नयो विधातुः । अपि नामाधुनापि गतबाधास्तिष्ठथ ?

वाचाला—णट्ठ बाहाए उअमो वि होइ, कुदो विज्जमाणदा खेदस्स ?

राधा—[ जनान्तिकं ] क्रीडा वयमनेन स्वशरीरं ताडूंखोपहारी-कुर्वता महाभागेन, तदावेदय किमाचराम इति ।

वाचाला—[ उत्थायअञ्जलिं बद्ध्वा माधवं प्रति ] महाभाग ! पिअसही णो णिवेदेइ जहा णिअं सरीरं उअहारीकदुअ रक्खिआ णो महाभाएण ता को णिओओ अणुचिट्ठीअदु ।

माधवः—[ विहस्य वक्रं राधावदनमवलोक्य ] वाचाले ! यदीदं तदा सखी ते कथयतु ।

राधा—(विहस्याधोमुखी तिष्ठति । )

आनन्दकन्दः—सखे माधव ! यतः कादम्बरीपरिमलोद्गारी समीर उपैति तथा तर्कयामि, जलविहाराय भवन्तमन्वेषयन् हलायुधोऽभ्येति ।

माधवः—( सत्वरं ) वाचाले ! यतः कादम्बरीदलितमधि आर्यं उपैति ततो यथेष्टं गच्छथ, किन्तु स्मरणीयोऽयं प्रसङ्गः । [ ततः सखेद-मुत्थाय ससखीजना राधा गन्तुकामापि गुरुभयात् कथमपि पदासदालं-रमर्पयन्ती निष्क्रान्ता । ]

( ततः प्रविशति वक्ष्यमाणरूपो हलायुधः । )

प्रवेशक गीतम् *

देल परवेस हलायुध नील वसन तनु गोर हे ।
हाला ऐसो नयन जनि जावक डुबल चकोर हे ।
वसन लोटिए धरनि तले काँप देह दुरवार हे ।
जनि यमुना भर बसइतेँ डगमग रजतपहार हे ।
कतए देह कहाँ कुन्तल कतए विभूषन जाए हे ।
कादम्बरि रसे परस किछु न चेत यदुराए हे ।
सरस राम कवि गाओल समुचित हलधररूप हे ।
प्रानवतीपति गीत रस बुझ सुन्दर भूप हे ।



माधवः—आर्य ! नहि किमपि ।

हलायुधः—जलविहारं कुर्मः ।

माधवः—यदाज्ञापयत्यार्यः । (हलायुधानन्दकन्दाभ्यां सह निष्क्रान्तः ।)

०॥ इति औत्कण्ठराधा नाम द्वितीयोऽङ्कः ॥०

------

## अथ तृतीयोऽङ्कः

( ततः प्रविशति पूजोपहारव्यग्रपाणिर्विचक्षणा )

विचक्षणा (परिक्रम्यावलोक्य च) अए ! समागदा ज्जेव णो पिअसही ।

( ततः प्रविशति वाचाला च )

राधा सखि विचक्षणे ! घटिता पूजासम्भृतिः ?

विचक्षणा—णहि घट्ठिआ । ( ततो राधा चरणादिकं प्रक्षाल्य एकाग्रमनसाऽर्द्धनारीश्वरं ध्यायति, ततो भक्तवत्सलतया प्रकटी वक्ष्य-माणरूपोऽर्द्धनारीश्वरः )

### गीतम्

भगतवछल बुझि भगति सरूपे, परगट हर नर-कामिनिरूपे
आध देह रजताचल भासे, आध कनकमय बल्लि विकासे
सिन्दुर कज्जु आध अभिरामे, आध विराज भुजग हिमधामे
हर वरतनु अनुचर भन 'रामे, पूरथु सुन्दर नरपति कामे

सर्वाः—[ सभयमुत्थाय ] जअदु जअदु भुअणणाहो । [ राधाऽउत्थाय कृतकृत्यमात्मानं मन्यमाना दण्डवद् भुवौ प्रणम्य अर्घ्यादिभिरभ्यपूज्य लोकवेदाविरोधेन माधवसङ्गममिच्छन्ती दण्डवद् भूयः पपात । ]

अर्द्धनारीश्वरः राधे ! अभिमतभाजनं भविष्यसि किन्तु विलम्बेन ।

राधा—[ सहर्षविषादं विचक्षणामुखं पश्यति । ]

विचक्षणा—भुअणणाह ! तुअ पाअ पङ्कज दंसणं तुरिअ फलइ ता किंति एदं ।

अर्द्धनारीश्वरः—एतो मत्पूजार्थमनिच्छया वृन्दावनादिममागताऽतो विलम्बः यावन्मदीयकार्यालिकगमनम् । [ इत्यभिधायान्तर्दधे । ]

राधा—[ विलोक्य ] कथमन्तर्दधे भगवानर्धनारीश्वरः ? तत्रैव सर्वर्तुकुसुमकाननमण्डली भूतलविमण्डनपरिष्कारास मालाकारकुटुम्बिनीम् । वयमपि तत्रैव यास्यामः ।

विचक्षणा—सहि अणुप्पेसिदा दाव मालाआरबहू ।

राधा—एहि गच्छाम । [ इति सर्वा निष्क्रान्ताः ]

[ ततः प्रविशति वक्ष्यमाणरूपा मालाकारकुटुम्बिनी ]

### गीतम्

जगत विदित हमे मालिनि नारि, हमहि चाह वृषभानकुमारि
कुसमक भूषन भवन दुकूल, विनु गुने गाथि करओ बहुमूल
राधाएँ एतय करब बिलास, साजए अएलिहुँ मणिमय धाम
सरस राम भन बुझ अनुरूप, कमलावति-पति सुन्दर भूप

मालकारिका—एतन्मणिगृहं तत्परिष्करोमि । [ इति तथा करोति परितो विलोक्य ] अये ! समागतैव ससखीजनराधा, तदपसरामि [इति निष्क्रान्ता ]

[ ततः प्रविशति वक्ष्यमाणरूपा ससखीजना राधा)

### गीतम्

माधव विरहें वियोगिनि भेस, देल वृषभानु दुलहि परवेश
मानहु आकुल विकल शरीर, मुखरुचि मलिन नयन झर नीर
धीर चेत नहिं दीघ निसास, आधि अधीनि आलि जन पास
विनु पुछलहुँ देअ उतर सयानि, पुछलहुँ न कहए समुचित बानि
भनए राम रस बुझ अनुरूप, कमलावतिपति सुन्दर भूप



विचक्षणा—सहि राहिए ! एसा वीसाम-वाटीए, इदं मिसणीकत-सअणं, ता एत्थ मुहुत्तं उअविसह्न ।

राधा—यथारोचते वयस्यायै । [ इति सर्वा उपविशन्ति ]

विचक्षणा—सहि राहिए ! भोदीए अन्नाविसी ज्जेव सरीरावत्था ता कधेहि माहवो दिट्ठो ।

राधा—[ सलज्जमधोमुखी तिष्ठति ]

[विचक्षणा—सहि ! मा एत्थ लज्जा वहु सा पाअरिआ वा माहवे उक्कण्ठिआ ण चिट्ठइ ।

राधा—शरीरनिर्विशेषासु कृतं लज्जया, तदाकर्णय—

### गीतम्

केलि कदम्ब तर सामरदेहा, हेरइतेँ जागल हृदय विदेहा
बाँके निहारलन्हि वदन हमरा, फुलल कमल जनि पड़ल भमरी
मधुर सँभाषन कएलन्हि हँसी, अमिञ बरिस जनि सारद ससी
तखनुक अवसर की कहब सखी, चरण ससारल गुरुजन देखी
मनहुँक महघञो हम पुन काले, उतर न देल रहल हिय साले
सुन धनि सरसराम एहो गावे, सुघर प्रेमरस दुहुँ दिस धावे
सुन्दर नरपति नागर सारे, बुझ कमलापति हृदयक हारे

### गीतम्

कि कहब तनिक वदन सानंदा, मानससरसिमनि उगु जनि चंदा
कुन्तलकुल मालतीफुल भाता, जनि तारकतति भरल अकासा
हासविमलचलचलोचनजोरा, नाच निरखिजनिअमिञ चकोरा
सामर देह कनकरुचि वासे, यमुना जनि दामिनि परगासे
सरसराम भन बुझ अनुरूपे, प्राणवती-पति सुन्दर भूपे

[इत्यभिधाय सास्र निष्कलङ्केत्यादि पठित्वा अकाण्ड-कोकिल-कण्ठनिनादेन मूर्च्छति

विचक्षणा—( ससंभ्रममुत्थाय ) वाचाले ! जलम् ।

वाचाला—[ जलमादाय धावति ]

[ राधा जलेन वदनमभि षिञ्चति रोदति च । ततो जल-सेक,—शान्तमोहा ]

राधा—सखि विचक्षणे ! वाच्यशेषमाकर्णय ।

विचक्षणा—सहि ! अवहिदह्मि ।

राधा—यथा तेन वयं रञ्जितास्तथा वाचाला वक्ष्यति ।

विचक्षणा—सहि वाआलादो सव्वं सुदं ।

राधा—अनवदति ।

गीतम्

तन्हि हमे बिघटलि मेरी, जहि खने सञ्ओ वरि हेरी
तहि खन सञ्ओ अनुखना, सालए मरम मदना
चान्द चन्दन पिक रावे, एकसरि जानि सतावे
जीव धरब की देखी, जग भेल वैरि विरोषी
सरस राम परथावे, सुन्दर नृप बुझ भावे

( ततो मन्दानिलेन मूर्च्छति । विचक्षणा चन्दनेनाभिषिच्य नलिनी-दलेन वीजयति । अथ चिरेण बुद्ध्वा ) राधा—

गीतम्

ने करह सघन नलिनिसयना, परसे कलेवर वर दहना
गरल वमय मनिमय भवना, दहइत बहय मलय पवना
देखइत सालए कुसुमवना, तेजलहु न तेज वैरि जिवना
सरस राम भन गुनसदना, बुझ सुन्दर नृप महिमदना



( ततो भ्रमरझङ्कारेण मूर्च्छति । )

विचक्षणा—( साश्रुपूरं करतलेन चालयन्ती राधाम्प्रति । )

गीतम्

चेतह सुचेतनि सारे, न करह भुवन अन्धारे
प्रान दोसरि हमे लेखी, कोने दोषें जाह उपेखी
कि कहब पापि जिवना, धिक-धिक अछ एहु खना
विनमञो विहि पए परी, न रहए त्रिभुवन सिरी
सरस राम परथावे, सुन्दर नृप बुझ भावे

( राधा—कथमपि प्रबुद्धा सर्वर्तुकुसुमकानने नयने व्यापारयति

वाचाला—सहि विअक्खणे ! दिट्ठिआ वड्ढसि पिअसही ।

विचक्षणा—तदो अवपीडिआ केअइ कुसुम भृङ्गमालाहिं ।

राधा—[ आकाशे लक्ष्यं बद्ध्वा ] हा नाथ माधव दयानिधे ! यस्य कृते निजशरीरमपि शार्दूलोपहारीकृतं स एव जनो वसन्त अधि-कृतिणायते । [ दिशो विलोक्य सास्रं दैवोपनतपान्थम्प्रति ]—

गीतम्

पथिक बुझाओब आज ना, मोरे बोले सिरि ब्रजराज ना
एतय समय सोँह राधना, विरहिनि हरिनि वेआध ना
कोकिल रव छलें गाव ना, विषम मोह उपजावें ना
चौदिस दए अलिजाल ना, कनक केतकि सब साल ना
कहथि राम अवधारि ना, धैरज धर वरनारि ना
बुझ सुन्दर नृप सार ना, प्रानवती हिअ हार ना

[ इत्यभिधाय पुनर्मूर्च्छति । विचक्षणादयः सत्वरं सलिलाद्युपचार-माचरन्ति । ]

राधा—[ चिरेण निःश्वस्य विलोक्य सास्त्रम् ] सखि ! विचक्षणे ! कुञ्जकेलिमारभ्य स्वप्ने सहचरी तदिदमर्थये स्मरणीयोऽयं मन्दभागधेयो मादृशो जनः । स्मरणीयश्च माधवेन । [ इत्यभिधाय रोदिति । ]

[ ततः प्रविशत्यपटीक्षेपेण कापालिकः ]

गीतम्

आएल योगपती दरवेश, भसमें भाङ्गे भयंकर वेश
साथ न केओ हाथ मोरपङ्ख, तनु अनु घनसन दशन शंख
सिरी अपार अचारक ढेढ, कटिक चोटा सोटा टेढ
राम सरस कौतुक गाव, सुन्दर नृपति बूझए भाव

[ राधाद्यो विलोक्य देववचनं स्मृत्वा सानन्दं प्रणमन्ति ।

राधा—भगवन्निदमासनम् ।

कापालिकः—[ विलोक्य परिक्रम्योपविशति ] राहिए ! अवि णाम भद्दम् ?

राधा—भगवन्भद्रमभद्रं वेत्यन्तर्याम्यनुवृत्ततया भवानेव वेत्ति ।

कापालिकः—[ विहस्य ] अनुप्पोसिदोस्मि अद्धनारीसरेण सम्पिद्दु-म्भ अज्ज दे माहव मिलनं कुरिस्सदि ।

राधा—( विहस्य ) गृहीतः खलु शिरसा प्रसाद एव भवतः । [ इति कापालिकपादयोः पतति । स चोत्थापयति । )

विचक्षणा अज्ज को उवाओ माहवमिलनस्स पिअसहीए ।

कापालिकः—तुमं विन्दावणं गदुअ चिट्ठ तत्थ जोअवलेन माहवदंसणं कज्जसिद्धी अ । ( इत्यन्तर्हितः । )

राधा—सखि ! तदत्र त्वरया मया गृहादचिरेणागत्य यावत्तदानयन-मिहैव स्थेयम् । ( इति सर्वा निष्क्रान्ताः । )

०।। इति तृतीयोऽङ्कः ।।०



## अथ चतुर्थोऽङ्कः

( ततः प्रविशति विचक्षणा )

विचक्षणा—एदं विन्दावणं एसो क्खु माहवस्स्लहो विडवी, एत्थ जाव माहवो एइ दाव अप्पणो सङ्गोवणेण चिट्ठामि । ( इति तथाकरोति)

( ततो कापालिकयोगसिद्धजनितोत्कण्ठौ कदम्बमवलोकयितुं प्रविशतो माधवानन्दकन्दौ । ]

आनन्दकन्दः—वयस्य माधव ! अयमेव कदम्बतरुस्तदत्र समुपविशावः ।

माधवः—प्रियानन्दकन्द ! यथाभिरोचते भवते ।

विचक्षणा—( विलोक्य परस्परगृहीतनामानावुभौ ) अच्चरीअं पचु-क्खं महाभाअ माहवस्स जिदं पिअसहीए जदो क्खु परस्परानुराओ भोदु ताव मुहुत्तं इधज्जेव चिट्ठामि ।

माधवः—( भूगतं कुसुममेकमादाय वक्षसि निधाय ) सखे ! तदीयकरतलगलितमिदम् ।

आनन्दकन्द ( निरूप्य ) सखे ! सत्यमेव ।

माधवः—( निःश्वस्य ) सखे ! तया भुवनभूषणया तया हृतं नो मनो यथा न पुनरावर्तते ।

आनन्द०—सखे ! त्वयापि तथैव तन्मन इति तर्कयामि ।

माधवः—कथमेवमवधारितम् ।

आनन्द०—दीर्घश्वासदेहवैकल्यादिभिः ।

माधवः—सखे ! तत्क्षणात्प्रभृति,—

गीतम्

मलयसमीरन परसल मोर, देह दाह उपजावए घोर
हिमकर बमए गरल सम तेज, दहन गहन सम सरसिज सेज

बरिस खार घनसार कलाप, प्राणहुँ ताहि परम उपताप
सरस राम भन बुझ अनुरूप, प्राणवतीपति सुन्दर भूप

( ततः कदम्बस्पर्शिना मलयानिलेन मूर्च्छति )

आनन्द०—( ससंभ्रममुत्थाय ) हाधिक ! कष्टं मुग्धोऽयं वयस्यः ।

( सलिलचन्दनाभ्याणासिच्य जलार्द्रया वीजयति । ततश्चिरेण लब्धसंज्ञः संकल्पवशेन राधां साक्षादीक्षमाण इव माधवः )

गीतम्

निरनय तुअ निरमाने, विहि भेल नृप पचबाने
अलक झलक गजमोती, तम रस जनि ससिजोती
रोमावलि कुच भारे, करि-कर कर अपहारे
चरन सरोज समाने, सरस राम एहो भाने
बुझ कमलावति कन्ता, सुन्दर नृप रसमन्ता

( आनन्दकन्दं प्रति ) सखे ! किमियमाननमपि मम मुखे निदधाति,
( संकल्पे राधामुद्दिश्य )-

गीतम्

सुमुखि समुख कर आनन न करहु नकर निदान
खेद देअ मदन विशिष लख आकुल करए परान
हिमकर बरिस हलाहल सरसिज बरिस हुतास
चानन - बन लए परिमल दहइत रहए बतास
जे छल कोकिल कलरव सब रव तह सुख हेतु
से आबे एहि जग मोहि भेल केवल जीवनक केतु
अबहुक परिचय राखए सुनिअ सुजन सब ठाम



अनुभवे आनल तुअ हिअ कुलिश बडिस परिनाम
सरस राम भन समुचित ई रस बुझ अनुरूप
प्रानवतीपति यदुपति रसमय सुन्दर भूप

( इत्यभिधाय पुनर्मूर्छति )

[ आनन्दकन्दः चन्दनाद्युपचारं विदधदेव रोदिति । ततः प्रविशति राधावियोगमुग्धमाधवमवलोक्य सानन्दभया विचक्षणा । )

विचक्षणा—(आनन्दकन्दं प्रति ) अज्ज वन्दामि ।

आनन्द०—( चिरेणाभिज्ञाय ) अये कासि भद्रे ?

विचक्षणा—अज्ज ! राहासही विअक्खणा ।

आनन्द०—( सानन्दम् ) अये वयस्य माधव ! राधासखी विचक्षणा समागतास्ति ।

माधवः—( तद्वचनामृतसिक्त इव विगलितमोहश्चक्षुषी उन्मील्य ।) सखे क्वासौ क्वासौ !!

आनन्दकन्दः—इयमसौ ।

विचक्षणा—एसा पणमेइ महाभाअं राहा-सही विअक्खणा ।

माधवः—( उत्थाय प्रियसखीं स्नेहेनाभिजुषति ) सखे ! इत आस्यताम् ।

विचक्षणा—( सप्रणाममासनमुरीकरोति )

माधवः—कुशलन्ते प्रियसख्याः ?

विचक्षणा—( सास्रम् )

गीतम्

कि कहब ओरे ! ताहरि कहिनि पुछिअ जनु
तुअ बिनु बासि कुसुम सनि कर तनु
चानन ओरे ! चउगुन चउँकि चउँकि रह
धनि कह कौने बेह देल हुतवह

विरचल ओरे ! शीतल शयन नलिनि दए
घन कए परसहिं करए भसममए
तुअ गुन ओरे ! गनइतें मुरुछि महीतल,
अविरल भासलि फिरय नयन जल
रसमय ओरे ! भनय राम विरहिनि गति
पटुमति रस बुझ सुन्दर नरपति

माधवः---विचक्षणे ! तदत्र किं विधेयम् ?

विचक्षणा---सच्चारं कारणाणं अलङ्कुरेह पिअसही तत्थ गन्तव्वं ।

माधवः---लोकवेदभया प्रतिबध्नाति ।

विचक्षणा—एदं क्खु वारिअं अबलानारीसरेण ।

माधवः—( सानन्दम् ) तदेहि गच्छामः ॥

( इति निष्क्रान्ता आनन्द-विचक्षणा-माधवाः )

( ततः प्रविशति यथोक्तरूपा राधा )

राधा—( परिक्रम्यावलोक्य च ) इदं सर्वर्तुकानरमिदं च, मणिभवनं, तदत्र विचक्षणापेक्षयोपविशामि । ( इत्युपविशति । )

[ ततः प्रविशति सानन्दकन्दया विचक्षणया प्रेषितो माधवः ]

राधा—( विलोक्य ) अये ! एक एव मन्मनोरथरूपो महाभाग उपैतीति । ( ससम्भ्रममुत्तिष्ठति )

[माधवः सलीलमुपसर्पति । राधा कथमपि सकम्पपुलकं मणिमयमासनमर्पयति । माधवः उपविशति नोपविशति च । तत्कृतनिर्बन्धा राधापि तस्थौ । ततः पुरतः करौ योजयित्वा उत्थाय परिक्राम्यन् माधवो राधां प्रति- ]

माधवः—



* गीतम् *

एकसर सुजन, कलपतरु लाख,
सम बुझि हमे भेल तुअ अभिलाख
तसु परिनति तति कि कहब आज,
अपन गमरपन कहितहुँ लाज
तुअ गुण रतन महघ मनु रंक,
अनुभव पेम पयोनिधि पंक
निज रिपु तुअ मुख अनुगत जानि
ताहि दहए देह पिक रव बानि
रूपें जितलि रति तोहे हमें जोर,
तें पचशर शर हन हिअ मोर
देखि दुखल तुअ लोचन लागि,
तैं बर कमल कलेवर आगि
सरसराम भन सुनि भरि कान,
हँसि शशिमुख परिरम्भल कान
कमला रतिपति गुनक निधान,
बुझ सुन्दर नृप महि-पचबान

[माधव अमृतसमुद्र-मज्जनादिव तदालिङ्गनाभिवृंतस्तामंके समारोप्य मणिमयासनमाक्रम्योपविशति । ]

माधवः— अयि प्रिये ! त्वामन्तरेण मया न नीतानि कियन्ति दुःखदुर्दिनानि ?॥

राधा—( अपवार्य ) मया पुनर्मोहमहोदधावविदितदुःखानि दिनानि नीतानि ।

[ ततः प्रविशन्तौ वाचालयाऽग्रतः मिलितौ विचक्षणानन्दकन्दौ ।
राधा, विलोक्य वञ्चितेव माधवोऽकाण्डमुत्थाय तिष्ठति ।
विचक्षणा - वाचाले, राधामालोक्य सस्मेरं राधानिकटे तिष्ठतः । ]

आनन्दकन्दः—माधव ! किमिदं क्रियते, एवं प्रतिगृहं गोकुलं गत्वा वदामि यथा माधवो राधामभिसरति, [ इत्यभिधाय माधवेनानुद्रुतो धावति, ततः कथञ्चिन्माधवेन बाहुभ्यामवष्टभ्यासन उपवेशितः प्राह ] माधव ! पूर्वमपि यदङ्गीकृतं मोदकसहस्रं तद्द्विगुणं चेद्ददासि तथा न किञ्चिद्वदामि, नो चेदित एव मुक्तकण्ठं यथादृष्टम् अभिधास्यामि ।

माधवः—प्रियवयस्य ! देयं, परन्तु गृहीत्वा गृहं गत्वा ।

आनन्दकन्दः—( उच्चैर्विहस्य ) अये ! अहमस्य लगुडमेकतरमेव पतति तस्मात्तुण्डुकहट्टेतैनार्थये ।

माधवः—सखे ! दीयते विद्यमानमिति को न वेत्ति ।

आनन्दकन्दः—सखे ! मास्तु किञ्चनमपि उच्चैर्वदामि ।

माधवः—तद्विगृहाण ।

आनन्दकन्दः—एवञ्चेत्तर्हि तावद्द्विगुणमधिप्रयच्छ ।

[ माधवः तथा करोति । ततः सर्वे समुत्थाय परिक्रम्येदं गायन्ति ]

❋ गीतम् ❋

अरजु पुरुब जत सुकृत समाज, तत परिनत मोर सुदिवस आज
कोकिल कमल कलानिधि देह, जनि बिनु घन समभिलुहमसेह
सुजन मिलन दुख सागर सेतु, जानल सुरतरु तह सुख हेतु
सरसराम भन अपन विचार, सुजन समाज संसारक सार
कमलावति कमलिनि अलिरूप, रस बुझ रसमय सुन्दर भूप



[ इति परिक्रम्य सर्वे समुपविशन्ति । ]

आनन्दकन्दः—वयस्य माधव ! जात एव मे द्विजस्य प्रसादाद्भिमतलाभस्तत्कथय अन्यदप्यर्थयसे ।

माधवः—

आस्तामस्तभया प्रजारतिरतिप्रीताश्च भूमीभुजः
सन्तु ब्राह्मणपुङ्गवाश्च सुखिनो भूरस्तु शस्यान्विता
आनन्दाङ्कुरवर्धनाय विदुषामीशप्रसादात्मना-
मस्तु प्रस्तुतनाटिकापि नितरामाचन्द्रतारं भुवि ॥

आनन्दकन्दः—एवमस्तु ।

[ सर्वे निष्क्रान्ताः ]

०॥ इति चतुर्थोऽङ्कः ॥०

इति समधिगतसमस्तप्रागल्भ्य-महोपाध्याय-
श्रीरामदासविरचिताऽऽनन्दविजयाभिधान-नाटिका समाप्ता ।



# आनन्दविजय

नाटिका : अङ्क ४

अंगीरस–शृङ्गार : स्थान—वृन्दावन

भाषा प्रयोग—संस्कृत ( श्लोक एवं कथोपकथन ), प्राकृत ( स्त्री एवं सामान्यपात्रक कथोपकथन ), अवहट्ठ ( छन्द ), देसिल वयना—मैथिली ( गीत )।

## पात्र-सूची

माधव—( नायक, श्रीकृष्णचन्द्र )

आनन्दकन्द—( विदूषक, श्रीकृष्णक नर्म-सखा )

राधा—( नायिका )

विचक्षणा एवं वाचाला—( राधा क कुशल सखी )

गुननिधान—( दैवज्ञ )

अर्ध-नारीश्वर—( साम्ब शिव )

कापालिक—( शैव सिद्ध )

सूत्रधार एवं नटी

—❀॥❀—